# गुरुमण्डलार्चनपुस्तकम्



संपादन :

स्व. अमोघवज्र वज्राचार्य

गंबहाः, यें

# गुरुमण्डलार्चनपुस्तकम्

संपादन :

स्व. अमोघवज्र वज्राचार्य

गंबहाः, ये

प्रकाशक :



# पुज्य गुरुवर स्व. पं. अमोघवज्र वज्राचार्यया नामं द्वहलपा

—बद्रीरत्न वज्राचार्य

# संकल्प वाक्य:

अद्येत्यादि० दानपति यजमान नेपालमण्डले कान्तिपुर महानगरे अमुक टोले विहारे वस्थित अमुक यजमान प्रभृति सकल परिवाराणां रक्षा उद्धार कामनार्थे ज्ञाता–ज्ञात कृतं सकल-पाप-नाश-कामनार्थं काय वाक्चित्त परिशुद्ध कामनार्थं धर्मार्थ-काम-मोक्ष-चतुवर्ग सप्त-वृद्धिमङ्गल फल प्राप्ति कामनार्थं स्व स्व मनोवाञ्छा तत्कारणं परिपूर्णकामनार्थं (विशेप-वाक्य थन तये) एतत्पुण्येन सर्व सत्वप्राणि उद्धार कामनार्थं अन्ते अनुत्तराया सम्यक्सम्बोधिज्ञान-फल प्राप्ति कामनार्थं

---

न्यालोंहथया– सुवर्णपनारीमहानगरे

दथुपुईया– कान्तिपुरान्तर्गत अमुक टोले

कोनेपुईया– काष्ठमण्डपस्थाने अमुक टोले

येलय– श्रीमदार्य्यावलोकितेश्वराधिष्ठित ललितापुरे

ख्वपया– भक्तापुरमहानगरे

# बन्दे श्रीः

बन्दे श्रीः वज्रसत्वं भुवन वरगुरु सर्वबुद्ध भवन्तम् ।
नाना रुपं जिनेन्द्र तिमिर भयहरं निर्मितं मेरु शान्तम्।
धर्म्मा धारं मुनीनां जिनगुण शुभदं मण्डलं वज्र धातुम्
सर्वा नन्दैक रूपं परम सुखमयं देहिनां मोक्ष हेतुम् ।१।
अज्ञान गाढ तिमिरार्णव मग्न सत्वाः मोहान्धकार
तमवारण चन्द्ररश्मिः । ज्ञानं प्रकाश्य परिपूरित
वीर्य ध्यानं श्रीवज्रसत्व मसमं शिरसा नमामि ।२।
यस्मिन् सुरासुर सुरेन्द्र नरेन्द्र बृन्दा स्त्वत् पादपद्म
पतिता भ्रमरा शिरोभिः । तत्सिद्धि साधन पयोब्धि
महानिधानं श्रीलोकनाथं श्चरणं शरण प्रयामि ।३।
बुद्ध त्रैलोक्यनाथं सुरवनमितं पार संसार तीर्णम् धीरं
गाम्भीर्य बन्तसकल गुणनिधिं धर्म्मराजा भिषिक्तम् ।
तृष्णा मोहान्धकारं कलिकलषहरं कामलो भाग्यवन्तम्
तं वन्दे शाक्यसिंह प्रणमित सिरशा सर्वकालं नमामि।४
ह्रींकारं संभवंनाथं करुणा स्निग्धमानसं अमोघपाशं
नामानं लोकनाथं नमाम्यहम् । मामकीलोचनीतारा
पद्मनी जिनधातवे सर्वबुद्धालय चैत्यं धर्मधातु नमोस्तुते
नमस्तारे तुरे बीरे तुतारे भय नाशनम् तुरे सर्वा तुरे
काले स्वाहाकारं नमाम्यहम् । सद्धर्म्म पुण्डरीकाक्षं
सर्वज्ञ गुणसागरम् समन्तभद्र शास्तारं शाक्यसिंहं
नमाम्यहम् ।। । शताक्षरनं ब्वने ।

# प्रस्तावना

गुरुमण्डल धैगु आदिकालं निसें झो बौद्धधर्मावलम्बी वज्राचार्य शाक्य तथा उपासक वर्गपिनि छैं खा पतिकं तया गुरुमण्डल दना त्तिकं याना पूजाकर्मादि दक्व याना वया च्वंगुखः । कारण गुरुमण्डल दने धैगुहे थगुदेह शुद्ध यायेगु गुरुस्मरण याना त्रिरत्न शरणं निसें सप्तविधानुत्तर पूजा थेंकं सम्पन्न याना फक्व संक्षिप्त यानानं दक्व ज्या सिधेक "सर्वप्रकारं जगतोहिताय कुर्य्यामिजस्त्रं सुखसंहिताय" धैगु वाक्य तया केवल जगतयात हित सुख ज्वीमा धैगु कामना याका झीत गुरुपिसं विया तःगुखः । गुरुमण्डल दनेगुया खँ न्ह्याक्वहे व्याख्या याना चोसानं फुके फंगु मखु ।

थुकिया निंतिहे हीनयाने शीलग्रहण मयाकं हिन्दु धर्मे गोदान मयाकं गथे छुं कर्म यायेगुनं योग्य मजूगुखः । वथें महायानया न्ह्याथि जागु शुभकार्य यायेतनं

गुरुमण्डल मदंकं मयाकुसें छुं कर्म यायेगुनं योग्यमजू। थ्व झी महायान बौद्ध धर्मया परंपरा सकसिनं सिया याना, याका वया च्वंगु खः।

थथिगु महत्वपूर्णगु सकल बौद्ध-धर्माबलम्बीपित अत्यंत आवश्यक जुया च्वंगु गुरुमण्डल थौं कन्हेया समये छुं मसिया वना सन्ध्यायाया निभाथें लुकिवियेत तयार ज्वी धुंकुगु आहानं सुथसिया निभाथें प्रकाश याना हये फैला धैगु अफिलाषां झी वज्राचार्य्य संघ वाहा वाहा पतिं पुलां पुलांगु सफू त स्वया नेपालया प्रसिद्ध विद्वान पृथ्वीमानन्द, सिद्धिहर्ष, जोगमुनि, ल. पु. या रत्नवहादुर वज्राचार्यपिसं छापे याका प्रकाश याना विज्यागु सफूत नं स्वया फक्व शुद्धयाना क्रिया वाक्य नं भापां मतसे संस्कृतं तया प्रकाश याये धका श्रीवज्रसत्व गुरुयात वज्राचार्य-सङ्घं ह्लापां द्यो छानागु जुल। अथेया निंतिं सकल बौद्ध जनतापिसं श्रीवज्रसत्वयात दक्षणा छाया वज्राचार्य्य-सङ्घ यात सहयोग स्वरुप थुगु गुरुमण्डल प्रत्येक बौद्ध गृहस्थीया छें तया ब्वना गुरुमण्डल दना च्वनिगु कर्त्तव्य खः।

थ्व गुरुमण्डल धैगु क्रिया समुच्चय, आदि कर्मावतार, आदि कर्म प्रदिपिका इत्यादि ग्रन्थं, व मेमेगु,

विभिन्न प्रकारया बौद्ध ग्रन्थनं पिकया: चवया त:गुस्व: । थुगु गुरुमण्डलया दक्के च्वे यागु "अद्य श्रीमच्छ्री थेंगु वाक्यं निसें कया श्रीस्वयम्भू धर्म-धातु-वागीश्वर सन्निधाने" थेंगु वाक्य तकयात देश स्थानया विचार याना किल्ला छुतेयाना थाँ थाँ यागु वाक्य मिलेयाना विद्वान् वर्गपिसं ब्वना मेगु वाक्य थ्वहे रुल अनुसारं गुरुमण्डल दनेगु ब्वनेगु याना यंके फत धासा झी वज्राचार्य्य-संघया परिश्रम सफल जुयी । पुनर्वार थुकिसनं छुं अपूर्ण अशुद्धगु दत धासानं प्रमाण सहित विया वज्राचार्य्य-संघयात सूचना विया बिज्यात धासा सहर्ष स्वीकार याना लिपायागु संस्करणे सुधार याना प्रकाश जुयी । पाठक वर्गपिनि प्रेम व सहायता दतधासा झीगु मेमेगु क्रियापद्धतिनं जिनव शुद्धयाना प्रकाश याये फै थेंगु अभिलाषाद्‌ ।

अमोघवज्र
वज्राचार्य्यसङ्घ

ने. सं. १०९२ चिल्लागा अष्टमी
दे आचार्य्यगुठी ।

# ।। नमो रत्नत्रयाये ।।

थ्व गुरुमण्डलार्चन सफु जिह्म पूज्य गुरुवर स्व. श्री अमोघवज्र वज्राचार्य गुरु थह्म हे संग्रहयाना थह्म हे सम्पादनयाना थह्म हे संशोधनयाना वज्राचार्य संघ पाखें प्रकाशनयानात:गु सफुख: ।

जिह्म शिष्यपिनिनं गुरुप्रति श्रद्धा तया: गुरुयानं गुरु सम्पादन याना: पिकयात:गु सफु जुगुलि वहे सफु पिकाय्गु व सफु प्रदान यायेगु त:धंगु इच्छा थ्व गुरुमण्डलार्चन सफु हानं छापे याका: प्रकाशनय् हया प्रदान यागु जुल । थ्व पुण्यं जिह्म शिष्यपिनि गुरुयोगं सुसम्पन्न जुया: बोधिचित्तउत्पन्न जुयेमा । प्रुफ स्वया: ग्वाहालि याह्म जिह्म शिष्य ज्ञानीराजायानं बोधिचित्त उत्पन्न जुयेमा । स्वय्हे यँपुक बाँलाक थ्व सफु छापय् याना:ब्यूह्म पल्पसा प्रिन्टिङ्ग प्रेस परिवारयातनं त:धंगु धन्यवाददु । थ्व पुण्यद्वारा जगतसत्वप्राणिपिनि जये जुयेमाल ।

सर्वदाकालं शुभमङ्गलं भवतु ।

**बज्रीरत्न वज्राचार्य**
**महाबोद्ध, यें**

# ओँ नमः श्री गुरुवज्रसत्वाय ॥

अथ गुरुमण्डलार्चनं लिख्यते ॥ आदौ त्रिराचमनं कुर्यात् ॥

ओँ ह्रीँ स्वाहा ३ कायविशोधने स्वाहा ॥

ततः पूजाभाण्डसंकल्पवाक्यं पठेत् ॥

ओँ अद्य श्रीमच्छ्रीशाक्यसिंहतथागतस्य बुद्धक्षत्रे भरतखण्डे भद्रकल्पे वैवश्वतमन्वन्तरे हिमवत्पर्वत-दक्षिणपार्श्वे सत्यत्रेताद्वापरान्तकलियुगस्य प्रथमचरणे जम्बुद्वीपे वासुकीक्षत्रे आर्यावर्तपुण्यभूमौ नेपालदेशे वाग्मत्या दक्षिण भागे मणिरोहिण्याः पश्चिमभागे प्रभावत्या उत्तरकोणे केशावत्याः पूर्वकोणे गोपुच्छ-गिरिवरेसुदुर्जयाभूमिभागे उपच्छन्दोहपीठे श्रीहेरुक-विरुपाक्षखगाननाधिवासिते अनेकदेवालयस्थाने श्री-स्वयम्भूचैत्यधर्मधातुवागीश्वरसन्निधाने ॥

अद्यमासानां अद्येत्यादिना यथासमयमासपक्षतिथि नक्षत्रयोगकरणवासरेसूर्य्यचन्द्रादीनां स्थितिसमयं बाचयित्वा दानपतीत्यादिना संकल्पवाचनानन्तरम् ।

**ओँ नमो भगवते पुष्पकेतुराजाय तथागतायाऽर्हते-सम्यक्सम्बुद्धाय तद्यथा ॥ ओँ पुष्पे २ महापुष्पे सुपुष्पे पुष्पोद्भवे पुष्पसम्भवे पुष्पावकीरणे स्वाहा ॥ इदं सपुष्पधूपदीपगन्धरसनैवेद्यादियुक्तं सुवर्णपुष्प-भाजनं संकल्पयाम्यहम् ॥**

यजमानादक्षतादिक गृण्हीयात् ॥

**ओँ नमस्ते डाकडाकिन्यादयस्तत्र गुरुचित्त समाहितः ।**

तद्नन्तरं न्यासयोगादिकं कृत्वा गुरुनमस्कारं कुर्यात् ।

**ओँ गुरुभ्यो नमः ३ ॥ गुरुबुद्धो गुरुधर्मो गुरु-सङ्घस्तथैवच गुरुवज्रधरः श्रीमान् तस्मै श्रीगुरवे नमः ॥ समस्त गुरु आज्ञा ॥**

शङ्खं पणिना छादयेत् ।।

**ओं आः हुं वं वज्रोदके हुं स्वाहा ।।**

शङ्खोदकेन शिरसि सर्वाङ्गे च सिञ्चयेत् ।।

**यथाहि जातमात्रेण स्नापिताः सर्वतथागताः । तथाहं स्नापयिष्यामि शुध्यतु दिव्यवारिणा ।। ओं आः हुं सर्वतथागतअभिषेकसमश्रिये हुं ।।**

पुनस्त्रिराचम्य पूजाभाण्डं स्पृशेत् ।।

**ओं ह्रीं स्वाहा ३ कायविशोधने स्वाहा ।। सर्वविघ्नान्नुत्सारये हुं ।। ओं नमो भगवते पुष्पकेतु-राजायेत्यादि० ।।**

पुष्पमेकं त्रिकायमधितिष्ठच्य आसनं कुर्यात् ।।

**ओं आः हुं ३ तिष्ठवज्रासने हुं ।।**

पुष्पं पार्श्वाभ्यां प्रक्षिप्य पापखण्डनं कुर्यात् ।।

**ओं सर्वपापानपनय हुं ।।**

शिरसि आत्मरक्षार्थे पुष्पं धारयेत् ।।

ओँ मणिधरिवज्रिणिमहाप्रतिसरे रक्ष २ मां
सर्वसत्वानाञ्च हुँ हुँ फट् स्वाहा ।।

सिन्दूर मण्डले भूषयित्वा आत्मना धारयेत् ।।

ओँ वज्रतिलक भूषणे स्वाहा ।।

मण्डले जलेनाभिषिञ्चेत् ।।

ओँ वज्रोदके हुँ । वज्रगोमये हुँ । ओँ वज्र भूमे
सुलेखे सर्वतथागताधिष्ठानाधितिष्ठन्तु स्वाहा ।।

तण्डुलोदकेन मण्डले पातयेत् ।।

दानं गोमयमम्बुनाच सहितं शीलं च सन्मार्जनं
क्षान्ति क्षुद्रपिपीलिकापनयं वीर्यं क्रियास्थापनम् ।।
ध्यानं तत्क्षणमेकचित्तकरणं प्रज्ञासुरेखोज्वला: एता:
पारमिता: षडेव लभते कृत्वा मुनेर्मण्डलम् ।।

भवतु कनकवर्ण: सर्वरोगै विमुक्त:
सुरमनुजविशिष्टश्चन्द्रवद्दीप्तिकान्ति: ।

धनकनकसमृद्धिर्जायते राजवंशे
सुगतवरगृहेऽस्मिन्कार्यकर्माणि कृत्वा ॥

ओँ सुरेखे सर्वतथागताधिष्ठानाधितिष्ठन्तु स्वाहा ।
ओँ चन्द्रार्क्क विमले स्वाहा ।

मण्डले पुष्पपातनम् । मण्डलम् भ्रामयित्वा पुष्पमेकं बलौक्षिपेत् ।

ओँ सर्वविघ्नान्नुत्सारये हुँ ॥

मण्डले एकविंशतिवारं पुष्पपातनम् कुर्यात् मध्यात्पूर्वादि क्रमेण ।

ओँ हः महामध्यमेरवे नमः ॥१॥ ओँ ह्रीं मध्यमेरवे नमः ॥ २ ॥ ओँ सूँ सूक्ष्ममध्यमेरवे नमः ॥ ३ ॥ ओँ यं पूर्वविदेहाय नमः ॥ ४ ॥ ओँ रं जम्बुद्वीपाय नमः ॥ ५ ॥ ओँ लं अपरगोडावरीये नमः ॥ ६ ॥ ओँ वं उत्तर कुरवे नमः ॥ ७ ॥ ओँ या उपद्वीपाय नमः ॥८॥ ओँ रा उपद्वीपाय नमः ॥९॥ ओँ ला उपद्वीपाय नमः ॥१०॥ ओँ वा उपद्वीपाय नमः ॥११॥ ओँ यः गजरत्नाय नमः ॥१२॥ ओँ रः अश्वरत्नाय

नमः ॥ १३ ॥ ओँ लः पुरूषरत्नाय नमः ॥ १४ ॥ ओँ व स्त्रीरत्नाय नमः ॥ १५ ॥ ओँ या खड्गरत्नाय नमः ॥ १६ ॥ ओँ रा चक्र-रत्नाय नमः ॥ १७ ॥ ओँ ला मणिरत्नाय नमः ॥ १८ ॥ ओँ वा सर्वनिधानेभ्यो नमः ॥१९॥ ओँ चं चन्द्राय नमः ॥२०॥ ओँ सूं सूर्य्यायनमः ॥ २१ ॥ ओँ आः हुँ श्री वज्रसत्वगुरवे नमः ॥ २२ ॥

पञ्चोपचार पूजा ॥

ओँ वज्रगन्धे स्वाहा ॥ गन्ध ॥
" बज्रपुष्पे स्वाहा ॥ पुष्प ॥
" बज्रधूपे स्वाहा ॥ धूप ॥
" बज्रनैवेद्यें स्वाहा ॥ नैवेद्य ॥
" बज्र लाजाय स्वाहा ॥ लाजा ॥

तण्डुलपुष्पोदकधारया मण्डले पातयेत्

ओं चतुररत्नमय मेरुमष्टद्वीपोपशोभितम् ।
नानारत्नसमाकीर्णं तद्ध नुत्तरदायिनः ॥

गुरुभ्यः बुद्धधर्मेभ्यः संङ्घेभ्यश्च तथवच ।
निर्यातयामि भावेन सम्पूर्णं रत्नमण्डलम् ॥

ततः स्तोत्रं पठेत् ।

ओं आः हुँ श्री मद्वज्रसत्वगुरुवरचरणकमलाय सम्यक् ज्ञानावभासनकराय नमोहुं नमस्तेऽस्तु नमो नमः ॥ भक्त्याहं त्वां नमस्यामि गुरुनाथ प्रसीदमे ॥

कृताञ्जलिना तिष्ठेत्

यस्य प्रसादकिरणैः स्फरितात्मतत्वो
रत्नप्रभापरिकरैः प्रहतान्धकराः ।
पश्यन्त्वनाविलदृशः सविलाशमुच्चै-
स्तस्मै नम स्कृतिरियं गुरुभास्कराय ॥
नमो बुद्धाय गुरवे नमो धर्माय तायिने ।
नमः सङ्घाय महते त्रिभ्योपि सततं नमः ॥
सर्वबुद्धं नमस्यामि धर्मञ्च जिनभाषितम् ।
सङ्घञ्च शीलसम्पन्नं रत्नत्रयं नमोऽस्तु ते ॥
रत्नत्रयं मे शरणं सर्वं प्रति दिशाम्यघम् ।

अनुमोदे जगत्पुण्यं बुद्धबोधौ दधे मनः ॥
आबोधौ शरणं यामि बुद्धधर्मगणोत्तमम् ।
बोधौ चित्तं करोम्येष स्वपरार्थप्रसिद्धये ॥

उत्पादयामि वरबोधिचित्तं
निमन्त्रयामि अहुसर्वं सर्वसत्वान् ।
इत्थं चरिष्ये वर बोधिचर्य्यां
बुद्धो भवेयं जगतो हिताय ॥

देशनां सर्वपापानां पुण्यानाञ्चानुमोदनां ।
कृतोपवासं चरिष्यामि आर्य्याष्टाङ्गमुपोषधम् ॥
मया बालेन मूढेन यत्किञ्चित्पापमाचितम् ।
प्रकृत्यावद्य सावद्यं प्रज्ञप्त्यावद्य मे वचः ॥
तदत्ययं देशयाम्येष नाथानामग्रतः स्थितः ।
कृताञ्जलि दुःखभीतः प्रणिपत्य पुनः पुनः ॥
अत्ययमत्ययं तेन प्रतिगृण्हन्तु नायकाः ।
न भद्रकमिदं नाथ नकर्त्तव्यं पुन मर्या ॥

यथा ते तथागतार्य्यार्हन्तः सम्यक्सम्बुद्धाय बुद्ध-ज्ञानेन बुद्धचक्षुषा जानन्ति पश्यन्ति यत्कुशलमूलं यज्जातिकं यन्निकायं यादृशं यत्स्वभावं यल्लक्षणं

यथाधर्मं तया संविद्यते ॥

तत्कुशलमूलं नित्यमनुत्तरायां सम्यक्सम्बोधौ परिणा-
मितं तथाहं परिणामयामि ॥

तथा ममानेन समानकालं
लोकस्य दुःखञ्च सुखोदयं च ।
हर्त्तुञ्च कर्त्तुञ्च सदास्तु शक्ति
स्तमः प्रकाशं च यथैव भानोः ॥
दृष्टः श्रुतोऽनुस्मृतिमागतो वा
पृष्ठः कथायोगमुपागतो वा
सर्वप्रकारं जगतो हिताय
कुर्य्यामजस्रं सुखसंहिताय ॥

तत्र नित्यकर्मपक्षे जापयोगो विशेषपूजायां तु बलिभाण्डे शङ्खोदकचुलुकं पातयेत् ॥

ओं ह्रीं आचमनं प्रोक्षमणं प्रतीच्छ स्वाहा ॥

ततो यं कारेण वायुमण्डलं रंकारेणाग्निमण्डलं तत्रो परित्रिमुण्डकृत चूडिकोपरि शितपद्मभाजनं तत्र मक्ताबिपरिपूरितं । तत्रोपरि वुं ओं जिं खं हुं

लाँ माँ पाँ ताँ वँ कारा: जाता: ।। पञ्चामृत पञ्चप्रदीपरूपं निष्पाद्य ।।

ततो गरुडमुद्रां दर्शयेत् ।।फें ३।। पुनः शङ्खोदकं पातयेत् ।।

ओँ इन्द्रादिलोकपालेभ्य: पाद्याचमनार्घं प्रोक्षमणं प्रतीच्छ स्वाहा ।। जः हुँ वँ होः वज्रांकुशजः । वज्रपाशः हुँ । वज्रस्फोटो वँ । वज्रावेशो होः ।।

इत्याकर्षणादिमुद्रां प्रदर्श्य पुनर्लोकपालमुद्रां दर्शयेत् । बलिभाण्डे षोडशधार पुष्पन्यासं कुर्यात् पूर्वादि क्रमेण ।।

ओँ इन्द्राय स्वाहा ।। १ ।। ओँ यमाय स्वाहा ।। २ ।। ओँ वरूणाय स्वाहा ।। ३ ।। ओँ कुवेराय स्वाहा ।। ४ ।। ओँ अग्नये स्वाहा ।। ५ ।। ओँ नैऋत्ये स्वाहा ।। ५ ।। ओँ वायवे स्वाहा ।। ६ ।। ओँ इशानाय स्वाहा ।। ८ ।। ओँ उर्द्ध ब्रह्मणे स्वाहा ।। ९ ।। ओँ अधपृथिव्यै स्वाहा ।।१०।। ओँ सूर्य्या ग्रहाधिपतये स्वाहा ।। ११ ।। ओँ चन्द्रानक्षत्राधिपतये स्वाहा ।। १२ ।। ओँ नागेभ्यः स्वाहा ।। १३ ।। ओँ

असुरेभ्यः स्वाहा ।। १४ ।। ओं यक्षेभ्यः स्वाहा ।।१५।। ओँ सर्वदिग्विदिग्लोकपालेभ्यः स्वाहा।।१६।।

तत्रैव पञ्चोपचारैः सम्पूज्य षोडशलास्यां दर्शयेत् ।

ओँ बज्रवीणे हुँ । ओँ बज्रवंशे त्रां । ओँ वज्र मृदङ्गे ह्रीं । ओँ वज्रमुरजे अः । ओँ वज्रलास्ये हुँ । ओँ बज्रमाले त्रां । ओँ वज्रगीते ह्रीं । ओँ वज्र नृत्ये अः । ओँ वज्रपुष्पे हुं । ओँ बज्रधूपे त्रां । ओँ वज्रावलोकिते ह्रीं । ओँ गन्धबज्रे अः ।। ओँ वज्रा दर्शने हुं । ओँ रसबज्रे त्रां । ओँ स्पर्श वज्रे ह्रीँ । ओँ धर्मधातुगर्भे अः ।।

घण्ठावादनं कुर्यात् वज्रसहितेन ।

ओँ हुँ स्वाहा । वज्रः । ओँ होः स्वाहा । घण्ठः । वज्रसत्वसंग्रहोद्भवो वज्ररत्नमनुत्तरः ।। वज्र धर्म ग्राहिने वज्रकर्म कुलोद्भवः ।। ओँ टक्किजःहुँ ३ टक्किराज होः ।।

स्तुतिः ।

इन्द्रादयो महावीरा लोकपाला महर्द्धिकाः ।
कोलयन्ति दशक्रोधा विघ्नहन्ता नमोस्तुते ।।

तर्पण

विभ्राणं बुद्धविम्वं दिवसकरधरं राशिया विन्दुलेखं,
मैत्रीयं चारुरूपं 'शिवशिरखपुषं' मञ्जुघोषञ्चगात्रम् ।
पद्मस्थं दण्डरूपं कुलिशवरतनुं बजिृणंभीमनादं,
बिज्ञानं ज्ञानरूपं निहतभवभयं पञ्चमूर्तिं प्रणम्य ।।

साक्षतपुष्पजलेन वलिमाण्डे पातनम् ।

इन्द्रादिवज्री सहदेव सङ्घै
रिमञ्च गृह्णन्तु वलिं विशिष्ठं ।
अग्निर्यमो नैऋति 'भूपतिश्च'
आपां पति वायु'धनाधिपश्च' ।।
ईशानभूताधिपतिश्च देवा
उर्द्धं च चन्द्रार्कपितामहश्च ।
देवाः समस्ता भुवि येच नागा
धराधरागुह्यगणैः समेताः ।।

प्रतिप्रतित्वेकनिवेदयन्तु

स्वकस्वका श्चैव दिशासु भूताः ।

गृह्णन्तु तुष्ठाः सगणैः समेताः

सपुत्रदाराः सहभृत्यसङ्घैः ॥

[हृष्टाः प्रशान्ताः स्रगगन्धमाल्यैः]

पुष्पं बलिं धूपविलेपनं च ॥

गृह्णन्तु भुञ्जन्तु पिवन्तु चेद-

मिदञ्च कर्म सफलं भवन्तु ॥

हुँ हुँ फट् फट् स्वाहा ॥

पुनश्च

ओँ नमो रत्नत्रयाय ॥ नमश्चण्डवज्रपाणये महाक्रोधाय दंष्ट्रोत्कटभैरवाय असिमुशलपरशुपाश-गृहीत हस्ताय ॥ ओँ अमृतकुण्डलि खख खाहि खाहि तिष्ठ तिष्ठ वन्ध वन्ध हन हन दह दह पच पच गर्जय गर्जय तर्जय तर्जय विस्फोटय विस्फोटय सर्वविघ्नविनाएकानां महागणपतिजीविन्तातकराय हुँहुँ फट् फट् स्वाहा ॥

तत्र पुष्पादिपूजा आदौ पुष्प (भावना)

**भगवान् श्रीअमृतकुण्डलि वलिपूजा निमित्यर्थ। स्वभावशुद्धाः सर्वधर्मा स्वभाव शुद्धोऽहं शून्यता-ज्ञानवज्रस्वभावात्मकोऽहम् ॥**

आवाहन [धूप] वाक्य

भगवन् श्री अमुक सद्‌वज्रविद्याराजं नमस्तुते।
कर्तुमिच्छामिते नाथ मण्डलं करूणात्मकम् ॥
शिष्याणामनुकम्पार्थं युष्माकं पूजनाय च।
तन्मे भक्तस्य भगवन् प्रशादं कर्त्तुमर्हसि ॥
समन्वाहरन्तु मां बुद्धाः जगदर्थक्रियार्थदाः।
ससस्थाःवोधिसत्वाञ्च याश्चान्या मन्त्रदेवताः ॥
देवता लोकपालाश्च भूताः सम्वोधिसाधिताः।
शासनाभिरताः सत्वाः येकेचिद्वज्रचक्षुषः ॥
**अमुकोऽहं महावज्री अमुकोदयमण्डलम्।
करिष्यामि जगच्छुद्‌ध्यैं यथाशक्त्युपचारतः ॥
अनुकम्पामुपादाय सशिष्यस्य च तन्मम।
मण्डले सहिताः सर्वे सान्निध्यं कर्तुमहर्थ ॥
ओँ आःहुँवज्रधूपं निर्यातयामि वज्रधूपं प्रतीच्छ स्वाहा ॥**

अध्येषणावाक्यं पठेत्

अद्यमे सफलं जन्म सफलं जीवितञ्च मे ।
समये सर्वदेवानां भाविताऽहं न संशयः ।।
अवैवर्त्ती भविष्यामि बोधिचित्तैकचेतसा ।
तथागतकुलोत्पत्तिर्ममा द्यस्यान्न संशयः ।।
अद्यो मे दिवसो ह्यद्य यज्ञो मेऽद्य ह्यनुत्तरः ।
सन्निपातो भवेदद्य सर्वबुद्धनिमन्त्रणात् ।
ओँ कुसुमाञ्जलिनाथ होः ।।

धारामण्डल पातनम्

ओँ वज्रोदके हुँ ।। ओँ वज्रभूमौ सुरेखे सर्वतथागताधिष्ठानाधितिष्ठन्तु स्वाहा ।। ओँ वज्र सुवर्णजलधारे स्वाहा ।।

सिन्दूरम्

इदन्ते परमं गन्धं पवित्रं घ्राणतर्पणम् ।
ददामि परमं भक्त्या प्रतिगृण्ह यथासुखम् ।।

[ सिन्दूरं सजलं शान्तं विचित्रं सुरसान्वितम् ।
निर्यातयाम्यहं प्रीत्या सर्वसिद्धिं प्रयच्छमे ।।]
ओँ वज्रगन्धे स्वाहा ।
ओँ आः हुँ बज्रसिन्दूरतिलकभूषणे स्वाहा ।।

यज्ञापवीतादि वस्त्रम्

ओँ बज्र वस्त्रालंकारपूजामेघसमुद्रस्फरण यज्ञोपवितं वोध्यङ्ग दृढ कवच वज्र वस्त्रवाससे स्वाहा ।।

पुष्पारोहणम्

स्वस्ति व कुरुतां बुद्धाः स्वस्ति देवाः सशक्रकाः ।
स्वस्तिः सर्वाणि भूतानि सर्वकालं दिशन्तु वः ।।
बुद्धपुण्यानुभावेन देवतानां मतेन च ।
यो योऽर्थः समभिप्रेतः सर्वोर्थोद्य समृध्यताम् ।।
स्वस्ति वो द्विपदे भोन्तु स्वस्ति वोंस्तु चतुष्पदे ।
स्वस्ति वो व्रजतां मार्गे स्वस्ति प्रत्यागतेषु च ।।
स्वस्तिरात्रौ स्वस्तिदिवा स्वस्ति मध्यदिनेस्थिते ।

सर्वत्र स्वस्ति वो भोन्तु माचैषां पापमागतम् ।।
सर्वे सत्वाः सर्वप्राणाः सर्वे भूताश्च केवलाः ।
सर्वे वै सुखिनः सन्तु सर्वे सन्तु निरामयाः ।।
सर्वे भद्राणि पश्यन्तु मा कश्चित्पापमागतम् ।
यानिह भूतानि समागतानि
स्थितानि भूमावथवान्तरिक्षे ।
कुर्बन्तु मैत्री सततं प्रजासु
दिवा च रात्रौ च चरन्तु धर्मम् ।।
ओं आः हुँ वज्रपुष्पं प्रतिच्छ स्वाहा ।।

[होजा] नैवेद्य [समयान्नादि]

ओं वज्र समयाचारं खाज्यभोज्यादिकं प्रभो ।
महायान षड्रससंयुक्तं बर्णगन्धरसोपेतं प्रतिगृह्ण
यथासुखम् ।।

[नैवेद्यं सर्वसंयुक्तं खाज्यभोज्यसमन्वितम् ।
वर्णगन्धरसोपेतं प्रतिगृह्ण यथासुखम् ।।]

ओं वज्र नैवेद्यं प्रतीच्छ स्वाहा ।।

मद्यधारादि

ओँ नमो भगवते वीरं वीरेश्वरायेत्यादि

गोदुग्धादि (सादुरू आदि)

ओँ सर्व बोधिचिन्तामृतजलधारे स्वाहा ।

फलादिकम् ।

ओँ सर्व आदर्शनफलाये स्वाहा ।

दीपं दर्शयेत्

नेत्राभिरामा वहुरत्नकोषा
नराधिपैरर्चितपादपद्मा ।।
ज्ञानप्रदीपाहृतमोहजाला
ये दीपमाला रचयन्ति तत्र ।।

ओँ आः हुँ वज्र दीपे ह्रीँ प्रतीच्छ स्वाहा ।

लाजाक्षतः

ये धर्मा हेतु प्रभवा हेतुस्तेषां तथागतः ।
ह्यवदत्तेषाञ्च यो निरोध एवं वादी महाश्रवणः ॥

सजलपुष्पाक्षतेन पूजयेत

ओँ अकारो मुखसर्वधर्माणामाद्यनुत्पन्नत्वात् ओँ आः हुँ फट् स्वाहा ॥

दक्षणा स्वरूप तण्डुलेन पूजयेत्

मञ्जुश्रिये कुमारभूताय वोधिसत्वाय महासत्वाय महाकारुणिकाय तण्डुलदेवदक्षणां संप्रढोषयाम्यहम् ॥

शताक्षरं पठेत् ।

ओँ वज्रसत्व समय मनुपालय वज्रसत्वत्वेनोपतिष्ठो दृढो मे भव सुतोष्यो मेभव सुपोष्यो मेभव अनुरक्तो मेभव सर्वसिद्धि मे प्रयच्छ सर्वकर्म सुच मे चित्त श्रियंकुरू हुँ हहहहहोः भगवन् सर्वतथागत वज्र मामे मुञ्च बज्रीभव महासमयसत्व आः ॥

क्षमार्पणं पठेत् ॥

अप्राप्तेच प्रतिज्ञान मशक्तञ्च मया विभो ।
यन्न्यूनमधिकन्नाथ तत्सर्वं क्षन्तु मर्हसि ॥
क्षन्तु मर्हन्तु सम्बुद्धा देवतास्तत्सुताश्च ये ।
ब्रह्माद्या लोकपालाश्च यानि भूता विधिक्रिया ॥
शान्ति स्वस्तिञ्च पुष्टिञ्च कृत्वा दानपतेः सुखम् ।

यत्कृतम् दुष्कृतं किञ्चित्मया मूढधिया पुनः ॥
क्षन्तव्यश्च त्वयानाथ यदि त्रातासि देहिनाम् ।
रक्षन्तु देवताः सर्वे कुरुध्वं प्रतिमा चिरम् ॥
कुरु दानपतेः शान्ति स्वर्ति पुष्टिञ्च सर्वदा ।
यत्कृतं कायजं पापं वाग्जं पापं च यत्कृतम् ॥
यत्कृतं चित्तजं पापं तत्सर्वं देशयाम्यहम् ।
मन्त्रहीनं क्रियाहीनं विधिहीनं तथैवच ॥
भावहीनं वाक्यहीनं तत्सर्वं देशयाम्यहम् ।

नमोस्तुते बुद्ध अनन्त गोचरा
नमोस्तुते सत्यप्रकाशका मुने ।
सत्यप्रतिष्ठाय प्रजाय मोचसे
सर्वे च कामा सफला भवन्तु ॥

मां प्रसीद परमेश्वर परमेश्वरि वारंवार
सहस्र कोटि अपराधं क्षमस्व ॥

मण्डलविसर्जनम् ॥

कृतो वः सर्वसत्वार्थं सिद्धि दत्वा यथानुगाः ।
गच्छध्वं बुद्धविषये पुनरागमनाय च ॥
स्वस्वस्थाने गच्छध्वं ॥ ओं आः हुं वज्रमण्डलमूः ।

इति गुरुमण्डलार्चनम् समाप्तम् ॥